सप्तमीविभक्ति का अधिकशब्द के योग में विधान होता है। अर्थात् यह निपातनेष्टि है। अत एव 'लोक के ऊपर हरि हैं' इत्यर्थवाग्विवक्षा में 'लोके लोकाद्वा अधिको हरिः' वाक्यघटक लोकशब्द से सप्तमी और पञ्चमी विभक्तियाँ होती हैं। 'तदस्मिन्नधिकम्' सूत्र के भाष्य में 'लोकसमीपाधिकरण में हरि हैं' इत्यर्थाश्रयणपूर्वक औपश्लेषिकाधिकरण में सप्तमीविधान स्वीकार किया है। कर्मक्तप्रत्ययनिष्पन्न अध्यारूढशब्द के अर्थ में वर्त्तमान अधिकशब्द के योग में कर्मार्थ उक्त होने के कारण प्रथमाविभक्ति ही होती है। यथा—'अधिको लोको हरिणा'।

**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी।।२.३.९।।**

**अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात्। उप परार्द्धे हरेर्गुणाः। परार्द्धादधिका इत्यर्थः। ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी। अधि भुवि रामः। अधि रामे भूः। सप्तमी शौण्डैरिति (पा.सू. २.१.४०) समासपक्षे तु रामाधीना। अषङ्क्ष. (पा.सू. ५.४.७) इत्यादिना खः।।इति कौमुदी।।**

**शे.–** **'उपोऽधिके च' (पा.सू. १.४.८७) इति कर्मप्रवचनीयत्वम्।**

**भैरवी–** **उपशब्दस्य कर्मप्रवचनीयत्वमुपपादयति–उपोऽधिक इति। परार्द्धादधिकेत्यत्र पूर्वोक्तज्ञापकादेव पञ्चमी। सूत्रे पर्यायेणेति–यदि यस्य चेश्वरवचनमित्यत्र यच्छब्दः स्ववाचीश्वरशब्दस्तु धर्मिपर एव तदा यस्य स्वस्येश्वर उच्यते तद्वाचकात् सप्तमीत्यर्थो यदा तु यच्छब्दः स्वामिपर ईश्वरशब्दश्च भावप्रधानत्वेनेश्वरत्वपरस्तदा यस्य स्वामिन ईश्वरत्वमुच्यते तद्वाचकात् सप्तमीत्यर्थे स्वामिवाचकात् सप्तमीत्यर्थः। इयञ्च सप्तमी विशेषण-वाचकादेव। षष्ठ्यपवादत्वात्। विशेष्यवाचकात्तु प्रातिपदिकार्थे प्रथमैव। 'अधि भुवि' इत्यस्माद् भूमिनिरूपितस्वामित्ववानिति बोधः। 'अधिराम' इत्येतस्मात्तु रामनिरूपितस्वत्ववती भूरिति बोध इति भावः। अधिकशब्दस्य शौण्डादिगणे पाठफलमाह–सप्तमी शौण्डैरितीति। यदा तु विभक्त्यर्थेऽव्ययीभावस्तदा तु 'अधिरामं भूः' इति प्रयोगः।**

'अधिरीश्वरे' (पा.सू. १.४.९७) एतत्सूत्रघटक ईश्वर शब्द का स्वस्वामिभावसम्बन्ध अर्थ है। अत एव प्रकृतसूत्रद्वारा स्वस्वामिभाव गम्यमान होने पर 'अधि' की कर्मप्रवचनीयसंज्ञा होती है। 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (पा.सू. २.३.९) जिससे अधिकता द्योत्य

हो, अर्थात् आधिक्यद्योतक प्रातिपदिक से प्रकृतसूत्रद्वारा कर्मप्रवचनीय के योग में सप्तमीविभक्ति का विधान होता है, अथ च स्वस्वामिभाव द्योतित होने पर जिसका प्रभु तद्वाचक प्रातिपदिक से और प्रभुबोधक प्रातिपदिक से पर्याय से सप्तमीविभक्ति का विधान होता है, यथा—'उप परार्द्धे हरेर्गुणाः' श्रीहरि के परार्द्ध से अधिक गुण हैं। प्रकृतस्थल में परार्द्ध से अधिक की विवक्षा है, अथ च 'उपोऽधिके च' सूत्रद्वारा उप की कर्मप्रवचनीयसंज्ञा होती है, अत एव कर्म वचनीयसंज्ञक उप के योग में प्रकृतशास्त्रद्वारा परार्द्ध शब्द से सप्तमीविभक्ति का विधान होता है। स्वस्वामिभावसम्बन्ध द्योत्य होने पर जिसका प्रभु और जो प्रभु, उभयत्र पर्याय से सप्तमीविभक्ति का विधान होता है। अत एव 'अधि भुवि रामः' अथ च 'अधि रामे भूः' प्रयोगोपपत्ति होती है। 'रामे अधि' अवस्था में 'सप्तमी शौण्डैः' शास्त्रद्वारा समासोपपन्न रामाधिप्रातिपदिक से 'अषङ्क्ष.' शास्त्रद्वारा खप्रत्ययविधानपूर्वक 'रामाधीना' पदोपपत्ति भी होती है।।

## विभाषा कृञि ।।१.४.९३।।

**अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे। यदत्र मामधिकरिष्यति। विनियोक्ष्यत इत्यर्थः। इह विनियोक्तुरीश्वरत्वं गम्यते। अगतित्वात् तिङि चोदात्तवति (पा.सू. ८.१.७१) इति निघातो न।।इति कौमुदी।।**

**शे.–** **ननु 'मामुद्दिश्य विनियोक्ष्यत' इत्यर्थादत्र कर्मणि द्वितीयैव किं कर्मप्रवचनीयत्वेनेत्यत आह–अगतित्वादिति। तिङि चेति–उदात्तवति तिङन्ते गतिर्निहन्यत इत्यर्थः। अत्र 'तिङ्ङतिङः' (पा.सू. ८।१.२८) इति निघातस्य 'निपातैर्यद्यदि' (पा.सू. ८.१.३०) इत्यादिना निषेधात् करिष्यतीति तिङन्तस्योदात्तवत्त्वमिति सर्वेष्टसिद्धिः।**

**भैरवी–** **ईश्वरे अर्थ इति–गम्यमान इत्यर्थः। तदुपपादयति–विनियोक्तुरिति। ननु मामित्यत्र 'कर्मणि द्वितीया' इति सूत्रेणैव द्वितीया भविष्यति किं कर्मप्रवचनीयसंज्ञयेत्याशयेन शङ्कते–नन्विति। अत्रेति–यदत्र मामधिकरिष्यतीत्यत्रेत्यर्थः। उदात्तवत्त्वमिति–विकरणेभ्यो नियमस्य बलवत्त्वेन करिष्यतीत्यत्र तिङि कृते विकरणे च कृते उदात्तवत्त्वमिति। सर्वेष्टसिद्धिरिति–सर्वेषामिष्टानां निघातवारणकर्मप्रवचनीयसंज्ञा-साफल्योदात्तश्रवणरूपाणामित्यर्थः। 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि' इति भाष्यकारोक्तेर्मङ्गलस्यावश्यकत्वाभिप्रायेणात्र सिद्धिशब्दोपादानम्। मूलेऽपि 'अधिरीश्वरे' इति सूत्रात् 'ईश्वरे' इति**

**'विभाषा कृञि' इति सूत्रेऽनुवर्त्ततेऽतस्तज्ज्ञानेनेश्वरस्मरणरूपमङ्गलं सर्वेषां भवत्वित्यभिप्रायेण प्रकरणान्तेऽस्य सूत्रस्योपन्यास इति शिवम्।**

**ईश्वर अर्थ गम्यमान होने पर प्रकृतसूत्रद्वारा √कृञ् धातु के योग में 'अधि' की कर्मप्रवचनीयसंज्ञा विकल्प से होती है।** अत एव 'कर्मप्रवचनीययुक्ते द्वितीया' सूत्रद्वारा द्वितीयाविभक्ति का विधान होकर 'यदत्र मामधिकरिष्यति' प्रयोगोपपत्ति होती है। 'मामधिकरिष्यति' का 'मां विनियोक्ष्यते' अर्थात् 'मुझको रखेगा' अर्थ है। जो मेरे लिये कार्य में विनियुक्त करेगा, वह अधिकारी ईश्वर है।

प्र.— 'मामधिकरिष्यति' स्थल में 'अधिकरिष्यति' का 'माम्' कर्म है। अत एव 'कर्मणि द्वितीया' सूत्रद्वारा ही द्वितीयाविधान संभव है। अतः प्रकृतस्थल में कर्मप्रवचनीयसंज्ञाविधानपूर्वक द्वितीयाविधान व्यर्थ है?

उ.— कर्मप्रवचनीयसंज्ञाद्वारा गतिसंज्ञा का बाध होने से 'मामधिकरिष्यति' स्थल में 'उदात्तवान् तिङ् परे रहते गति को निघात होता है' इत्येतदर्थक 'तिङि चोदात्तवति' सूत्रद्वारा अधि को निघात नहीं होता है।

प्र.— 'मामधिकरिष्यति' वाक्यघटक 'करिष्यति' पद के उदात्तवान् होने पर 'तिङि चोदात्तवति' शास्त्र की प्रवृत्ति संभव है। 'अधिकरिष्यति' स्थल में 'तिङ्ङतिङः' सूत्रद्वारा 'करिष्यति' पद को अनुदात्त हो जायेगा, अत एव 'अधि' की कर्मप्रवचनीयसंज्ञा का निघाताभावफलोपादान करना भी असंगत है।

उ.— 'अधिकरिष्यति' स्थल में 'तिङ्ङतिङः' सूत्रद्वारा प्राप्त निघात 'निपातैर्यद्यदि.' शास्त्रद्वारा हो जाता है। इस प्रकार उदात्तवान् तिङ् परे रहते 'अधि' की कर्मप्रवचनीयसंज्ञा के विधान का 'तिङि चोदात्तवति' सूत्रद्वारा निघाताभाव फल का अन्वाख्यान करना सर्वथा युक्तियुक्त है।

**।।इति सप्तमी-विभक्तिः।।**

**'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति भाष्य को हृदयङ्गम कर कौमुदीकार ने प्रकृतसूत्र में 'ईश्वरे' पदानुवर्त्तन करके एवं शेखरकार ने कारकप्रकरण का समापन करके 'सिद्धिः पदोपादानपूर्वक सर्वमङ्गलकामना की अभिव्यक्ति की है।**

**नीलाद्रीशं जगन्नाथं नत्वा शब्देन्दुकारकम्।**
**हिन्दीभाषायुतं भक्त्या गुरुपादे समर्पितम्।।**

**।।शुभं भूयात्।।**